NDRUM SANSKRIT SERIES

NO. II.

# अभिनवकौस्तुभमाला–दक्षिणामूर्त्तिस्तवौ

श्रीकृष्णलीलाशुकमुनिना

प्रणीतौ

# ABHINAVAKAUSTUBHAMÂLÂ

AND

# DAKSHIṆÂMÛRTISTAVA

OF

*KRISHṆALÎLÂSUKAMUNI*

Edited with Notes

BY

T. GAṆAPATI ŚÂSTRÎ

*Principal, His Highness the Maharajah's Sanskrit College, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.

1907.

*TRIVANDRUM SANSKRIT SERIES.*

NO. II.

# ABHINAVAKAUSTUBHAMÂLÂ

AND

# DAKSHIṆÂMÛRTISTAVA

OF

## *KRISHṆALÎLÂSUKAMUNI*

Edited with Notes

BY

T. GAṆAPATI SÂSTRÎ

*Principal, His Highness the Maharajah's Sanskrit College, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:
PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.
1905.

॥ श्रीः ॥

अनन्तशयनराजकीयसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः २.

# अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ

श्रीकृष्णलीलाशुकमुनिना

प्रणीतौ

अनन्तशयनस्थराजकीयसंस्कृतविद्यामन्दिराध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितौ

लघुटिप्पण्या च संयोजितौ

तौ च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितौ ।

कोळम्बाब्दाः १०८१, क्रैस्ताब्दाः १९०५.

# निवेदना ।

अभिनवकौस्तुभमालाया दक्षिणामूर्त्तिस्तवस्य च प्रणेता कृष्णलीलाशुकमुनिर्यथा पुरुषकारकर्तुर्न भिद्यते, तथा पुरुषकारग्रन्थस्य निवेदनायां प्रत्यपादयम् । कृष्णकर्णामृतस्य कर्ता लीलाशुकः किमयमेव स्यादुतान्य इति न निश्चयः । तत्र अभिनवकौस्तुभमालाया रत्नसहोदरकौस्तुभमालेत्यपि प्रसिद्धिरस्ति ।

त. गणपतिशास्त्री.

## Prefatory Note.

As has been stated in the Introduction to *Purushakara*, its thor Krishnalilasukamuni is also the author of *Abhinavakaustubhamala* and *Dakshinamurtistavam*. But it is not certain whether he is the same as Lilasuka, the author of *Krishnakarnamritam*. *Abhinavakaustubhamala* is also known s *Ratnasahodarakaustubhamala*.

T. G. S.

॥ श्रीः ॥

श्रीकृष्णलीलाशुकमुनिप्रणीता

# अभिनवकौस्तुभमाला ।

लक्ष्मीश्च कौस्तुभश्चेति यद्रत्नद्वयमुद्धृतम् ।
तन्नः कामदुघं भूयात् तेजस्त्रैलोक्यमङ्गलम् ॥ १ ॥

यत्र साम्राज्यचिह्नानि यमिनां हृदयैः सह ।
श्रीश्च जाग्रति तज्जीयाच्छ्रीश! त्वच्चरणाम्बुजम् ॥ २ ॥

यच्चादिकवयो व्यासप्रमुखाः सपितामहाः ।
भागीरथीसरस्वत्योः प्रवाहप्रभवं विदुः ॥ ३ ॥

(युग्मकम्.)

किं ब्रूमः प्रपदं देव! यस्य प्रतिनिधावपि[1] ।
पृष्ठे जरठकूर्मस्य जगती प्रतितिष्ठति ॥ ४ ॥

तेऽमी नखेन्दवो देव! यान् हि नाभिसरोजभूः ।
पुरा सिसृक्षितस्येन्दोः प्रतिसामन्वमन्यत ॥ ५ ॥

जयतां जगतां नाथ! गुल्फावुत्फुल्लविभ्रमौ ।
यावनुस्मरतां गाढमुन्नतिर्[2]न तथानयोः ॥ ६ ॥

तव देव! पदं धन्या मणिभूषणमण्डली ।
वेषान्तरेण वेदान्तवाणीव विनिषेवते ॥ ७ ॥

---

१. साक्षात् तस्मिन् जगती प्रतितिष्ठतीति किमु वक्तव्यमित्यपिशब्देन द्योत्यते.

२. उन्नतिरुत्कर्ष उत्सेधश्च.

निर्वाणसंज्ञकं देव! तव तत् परमं पदम् ।
चिरात् प्रविशतां शङ्के जङ्घे मङ्गल्यतोरणे ॥ ८ ॥

एते ते जानुनी नाथ! यशोदाङ्गणरिङ्गिणी ।
लक्ष्मीः [1]करीषगन्धान्ध्यच्छलाज्जिघ्रति ये (स्मिता ?)[2] ॥ ९ ॥

तावूरू जयतां यौ किं द्वौ करौ स्मरहास्तिनः ।
[3]हस्तिपृष्ठाप्रतिष्ठश्चेन्नैव देवः श्रियं जयेत् ॥ १० ॥

त्वत्कटीतटसौभाग्ये स्वामिन्नास्माद्गिरां गतिः ।
लक्ष्मीवसुन्धराधन्यमनीषास्तत्र जाग्रतु ॥ ११ ॥

कामरूपैव देव! श्रीर्येयं वक्षस्तटे स्थिता ।
कटीतटेऽपि कामान्धा भाति पीताम्बरात्मना ॥ १२ ॥

काञ्चीयं काञ्चनी नाथ! भाति रत्नप्रभोद्भटा ।
मुग्धयेव कृता लक्ष्म्या मदान्धस्मरशृङ्खला ॥ १३ ॥

सेयं नाभी यया देव! शङ्खः संघृष्य गर्जति ।
लक्ष्मीविरिञ्चयोः स्पर्धा वस्तुं यत्सरसीरुहे ॥ १४ ॥

वलित्रयमिदं देव! जगत्त्रयमनोहरम् ।
माधुर्यवारिधेर्धत्ते वीचीनां विभ्रमश्रियम् ॥ १५ ॥

---

१. करीषगन्धान्ध्यं शुष्कगोमयगन्धव्याप्तत्वं तस्यच्छलात् तद्रूपाद्वा कल्पिताल्लिङ्गादित्यर्थः । जिघ्रति स्पृशति इति मन्ये इति शेषः । एवञ्च लक्ष्मीसंसर्गजमेवेदं जानुनोः करीषगन्धान्ध्यं, न त्वङ्गणरिङ्गिणवशजनितामिति तात्पर्यं फलितम् । लक्ष्मीश्च करीषिणी श्रीसूक्ते श्रूयते—'गन्धद्वारान्दुराधर्षां नित्यपुष्टां करीषिणीं । ईश्वरीं सर्वभूतानां त्वामिहोपह्वये श्रियम्' इति. २. 'सदा' इति वा 'मुदा' इति वा पाठो भवेत्. ३. इदमर्धं 'इतिप्रविष्टप्रतिश्चेनैव देवः श्रियं जयेत् ?' इत्येवादर्शपुस्तके दृश्यते.

श्रीमानुदरबन्धोऽयं श्रियं देवस्य पुष्यति ।
कान्तिसिन्धौ दृशोः क्रीडाप्लवः क्लृप्त इव श्रियः ॥ १६ ॥

लोकैकनाथ! रम्येयं रोमराजी विराजते ।
क्लृप्तेव प्रथमं लक्ष्म्या वक्षोहर्म्याधिरोहणी ॥ १७ ॥

श्रीवत्सः श्रीनिधे! सोऽयं श्रियं कामपि पुष्यति ।
यः पद्मजापदाम्भोजक्रीडाचिह्नानि निह्नुते ॥ १८ ॥

चकास्ति कौस्तुभः सोऽयं तव देव! भुजान्तरे ।
पयोधिराजकन्याया हर्म्यदीप इवार्पितः ॥ १९ ॥

नानारत्नसहस्राणि नाथ! वक्षसि जाग्रति ।
रत्नाकरसुतोद्वाहयौतकानीव कानिचित् ॥ २० ॥

वैजयन्तीमिमां देव! मन्ये [2]साधारणीं ध्रुवम् ।
ममत्वपात्रं भृङ्गाणां [3]देवस्य मदनस्य च ॥ २१ ॥

भान्ति ते जगतां नाथ! भुजा भूषणभूषणाः ।
जगद्भारोद्वहैश्चक्रे यैश्चक्रादिभरश्रमः ॥ २२ ॥

पाणयश्चक्रपाणे! ते भान्ति भक्ताभयप्रदाः ।
येषां दक्षिणतैवासील्लक्ष्मीपाणिग्रहोत्सवे ॥ २३ ॥

लोकपालललाटेषु लक्ष्म्याश्च स्तनमण्डले ।
लेखारसज्ञैर्यैः पञ्चशाखैः पञ्चशरः स्मरः ॥ २४ ॥

(युग्मकम्)

तेऽमी कररुहा देव! येषां विभ्रमविक्रमाः ।
कमलाविपुलोत्तुङ्गस्तनयोर्हृदि च द्विषः ॥ २५ ॥

---

१. 'वैजयन्ती पताकायां जयन्त्यां केशवस्रजि' इति यादवः. २. साधारणीं सामान्यवनिताम्. ३. देवस्य प्रकरणात् तवेत्यर्थः.

कम्बु ग्रीवामिमां नाथ! कथं तु कथयामहे ।
लक्ष्मीकङ्कणमुद्राभिर्या त्रिरेखास्थितिं जहौ[1] ॥ २६ ॥
कर्णपाशाविमौ देव! स्फुरन्मकरकुण्डलौ ।
अवशाद्यत्प्रवेशान्धा मृगा मृगदृशां दृशः ॥ २७ ॥
तौ कपोलाविमौ देव! यावुद्वीक्ष्य रमाभुवौ ।
मन्ये नान्यौ[2]वमन्येतां मङ्गल्यमणिदर्पणौ ॥ २८ ॥
अधरं देव! बिम्बोष्ठममृतं भुवनोत्तरम् ।
आहुर्वि[3]पर्ययेणात्र प्रमाणं प्राणवल्लभे ॥ २९ ॥
तवाधरसुधा सेयं यां निपीय पयोधिजा ।
ततः प्रभृति वै देव! सुधान्तरमुपेक्षते ॥ ३० ॥
दन्तपङ्क्तिरियं देव! दशनच्छदरञ्जिता ।
मुखेन्दुकान्तेराधत्ते मुक्तावलिपरिष्क्रियाम् ॥ ३१ ॥
देव! त्वन्नासिकावज्रकुसुमं प्राप्य मन्मथः ।
कुसुमान्तरसम्पत्तिं मन्यते पङ्क्तिपूरणम् ॥ ३२ ॥
अनयोः पुण्डरीकाक्ष! नेत्रयोः पुण्डरीकयोः ।
मुखेन्दुः कान्तिसरसी मूलभूमिस्तु चिन्त्यताम्[4] ॥ ३३ ॥
देव! क्रीडाकटाक्षाय भूयो बद्धोऽयमञ्जलिः ।
कामं न केवलं लक्ष्म्या यो दुग्धे जगतामपि ॥ ३४ ॥
तदेतद् वदनं देव! माधुर्यमिव मूर्त्तिमत् ।
वीक्ष्य सेवो[5]च्छलारूढनासाग्राङ्गुलि यज्जगत् ॥ ३५ ॥

---

१. कम्बुना त्रिरेखेण भाव्यं, न तु त्रिरेखाहीनेन । 'त्रयी तु कम्बुः शङ्खोऽस्त्री सुग्रीवो मधुरस्वनः । त्रिरेखः षोडशावर्तः' इति वैजयन्ती. २. अन्यौ वास्तवौ. ३. भुवनोत्तरत्वादुत्तर इति हि बिम्बोष्ठो वक्तव्यः, न त्वधर इति. ४. विरोधिन इन्दोरुत्पत्तिस्थानत्वमद्भुतामिति भावः. ५. सेवायाः सेवाकालिकाञ्जलेश्छलाद्व्याजाद् वस्तुतो विस्मयादित्यर्थः आरूढनासाग्रा अङ्गुलयो यस्य तत्.

यत्र स्वयंवरे स्पर्धा लक्ष्मीकान्त्योः किलाभवत्।
वेदाश्च केलिजल्पाश्च सौभ्रात्रं यत्र बिभ्रते ॥ ३६ ॥

(युग्मकम्)

पद्मचन्द्रमधुज्योत्स्नाविवादान्ध्येष्वनादिषु।
देव! त्वद्वक्त्रबिम्बस्य स्मितस्य च किमुच्यताम् ॥ ३७ ॥

कस्तूरीतिलकामोदे ललाटे भ्रमरैर्वृते।
देव! त्वद्भ्रूलताभृङ्गचमूः पाति मुखाम्बुजम् ॥ ३८ ॥

अष्टमीन्दुनिभस्यास्य ललाटाष्टापदस्य ते।
यौवराज्यपदं देव! मुखेन्दुरनुमन्यताम् ॥ ३९ ॥

नाथ! धम्मिल्लभारेऽस्मिन् नानासौरभनिर्भरे।
भृङ्गैर्लक्ष्मीकटाक्षाणां जृम्भतेऽतिमृधं मुधा ॥ ४० ॥

नाथ! त्वामेव मन्येऽहमचलं भुवनोन्नतम्।
अनुल्लङ्घ्येव यन्मौलिं [2]छेलादर्कोऽपि सेवते ॥ ४१ ॥

देव! त्वद्भक्तिरथवा त्वत्तोऽपि द्विगुणोन्नता।
जितस्त्वमासि यद्राजा प्रह्लादेन रणेऽपि हि ॥ ४२ ॥

नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ॥ ४३ ॥

तदिदं त्वद्वपुर्देव! नीलं निर्वृतिमन्मयम्।
कान्तिभूषाशताभोगकर्बुरं भातु मे मुहुः ॥ ४४ ॥

---

१. पद्मचन्द्रयोर्मधुज्योत्स्नयोश्चोत्कर्षाप्रतिष्ठानान्न किमपि वक्तुमर्हमुपानतये-ति भावः। २. नेत्रस्थानावस्थानव्याजादित्यर्थः। सेवनं च मौल्यनुल्लङ्घनपूर्वमि-होत्प्रेक्ष्यम्.

तत्त्वं परं किमपि यत् स्वरसावभासि
सान्द्रप्रमोदलहरीभरिताखिलाशम् ।
कैवल्यविग्रहमिदं तदनुग्रहार्थ-
मस्मादृशां जयति तादृगुपात्तमूर्त्ति ॥ ४५ ॥

अनुभवतममुं भृशं दृशाव॑भिनवकौस्तुभमालयानयां ।
भुवनविभुमभूतपूर्वया पुलकपरम्परया च भूषितम् ॥ ४६ ॥

श्रीकृष्णकेलिशुकवाङ्मयवीचिमाला—
लीलारसज्ञ(मकर)श्रवणाञ्चलस्य ।
देवस्य दिव्यहृदये हृदयङ्गमेयं
कण्ठस्थले च सुकृतां सुचिराय जीयात् ॥ ४७ ॥

इति श्रीकृष्णलीलाशुकमुनिविरचिता
सप्तचत्वारिंशत्संख्या
अभिनवकौस्तुभमाला
समाप्ता ।

१. अभिनवेति स्तुत्यर्थे नूतनार्थे च.

॥ श्रीः ॥

श्रीकृष्णलीलाशुकमुनिप्रणीतो

# दक्षिणामूर्त्तिस्तवः ।

दुर्वारगर्वभरदूरविजृम्भमाण-
मोहान्धकारपरिपाटनबद्धदीक्षः ।
शश्वद् भृशप्रविसरत्सहजप्रकाश-
कोशः प्रभुर्जयति कोऽपि वटस्थलीशः ॥ १ ॥

अग्नीन्दुभानुभिरशेषजगत्प्रकाशै-
रासादितं नयनभावमवेक्ष्य वेदाः ।
यद् वेदयन्ति महसां तमसां च दूरं
तद् दैवतं वटतटीदयितं भजामः ॥ २ ॥

कल्पद्रुमैरलममीभिरनीश्वराणा-
माराधनीयपदवीमधिगम्य रम्यैः ।
तेऽमी वयं परिवृतं परमेश्वरेण
तं वा वटं तमपि वा विभुमाश्रयामः ॥ ३ ॥

षड्वर्गदुर्गपरिलङ्घनकोपितेन
चित्तेन यत्र सुचिरं चपला मुनीन्द्राः ।
तच्छाम्भवं मधुरिमैकरसोर्मि धाम
श्रीमद्वटाश्रयमुपाश्रयितुं यतध्वम् ॥ ४ ॥

नृत्यन्ति यच्छिरसि नाकनदीप्रवाहा-
स्तद्भ्रातरश्च रसने वचसां प्रपञ्चाः ।
चित्ते दया चरणरेणुषु वाञ्छितार्थाः
पायादयं वटतटीदयितो विभुर्वः ॥ ५ ॥

इन्द्रादयो यदरुणाङ्घ्रिरजःकणेन
राज्यश्रियं त्रिभुवनैर्भृशमुद्वहन्ति ।
व्याघ्रत्वचा परिहितस्य हि तस्य भिक्षो-
र्व्याख्याश्रियं वटतटावसथस्य वन्दे ॥ ६ ॥

आम्नायवीचिसहचारिवचःप्रसारै-
रासारसारसरणीमाधिरोहमाणैः ।
आसिच्य मानसमनन्यधियां मुनीना-
माद्यं वटं च विहरन् गिरिशोऽवताद् वः ॥ ७ ॥

मन्दस्मितेन च मनोहरमुद्रया च
व्याख्यानवीथिविभवैश्च विजृम्भमाणैः ।
आख्यायमाननिजतत्त्वरसानुभूति-
र्विश्वेश्वरो वटतटप्रकटोऽवताद्वः ॥ ८ ॥

ऊर्ध्वं दिवो भवमधश्च भुवो भवन्तं
तिर्यक् च पर्यवसिते भववैभवं तम् ।
गाढं कयापि कृपया वटवृक्षमूले
मन्मानसे च विहरन्तमनन्तमीडे ॥ ९ ॥

रक्ताङ्गुलीयुगळनर्त्तितचारुमुद्रं
संसारवृक्षपरितक्षपरश्वधाढ्यम् ।

क्रीडागृहीतमृगलाञ्छनलाञ्छिताग्रं
हस्तेन जानुनिहितेन जगन्मनोज्ञम् ॥ १० ॥

तत्तत्फणामणिविभूषणभासुरेण
भाग्याधिकेन फणिना कृतयोगपट्टम् ।
वामेतराङ्घ्रितलकान्तिकरम्बितेन
वामोरुणा गिरिसुताहृदयं हरन्तम् ॥ ११ ॥

इन्दोः कलां खलु जटापटले वहन्तं
सर्वाः कला वचनवीथिषु चारयन्तम् ।
देव्या वृतं गिरिजया मुनिभिः शुकाद्यै-
स्तं विश्वतो विशदमादिगुरुं प्रपद्ये ॥ १२ ॥
(विशेषकम्)

त्रिभुवनसुभगेयं दक्षिणामूर्त्तिमूर्त्तौ
भगवति कृतभावा कृष्णलीलाशुकीया ।
जयतु जयतु देवी भारती जीवलोक-
श्रवणहृदयजिह्वाजन्म साफल्यमेतु ॥ १३ ॥

इति श्रीकृष्णलीलाशुकमुनिविरचितो
दक्षिणामूर्त्तिस्तवः
समाप्तः ॥

BY THE SAME EDITOR.

---

## Ready for sale.

भक्तिमञ्जरी (Stuti) by H. H. Svati Srî Râma Varma Maharajah. 1 0 0

---

## Trivandrum Sanskrit Series.

No. 1 — दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. 1 0 0

No. 2 — अभिनवकौस्तुभमाला - दक्षिणामूर्त्तिस्तवौ by Krishnalîlâsukamuni. 0 2 0

No. 3 — नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna. 0 4 0

### IN THE PRESS.

— व्यक्तिविवेकः (Alankâra) by Mahima Batta.

— दुर्घटवृत्ति (Vyâkarana) by Saranadeva.